विद्याभेदस्यानभ्युपगमात् । तत्तद्विद्याव्यवस्थितगुणोपसंहारस्यैवाभ्युपगमाच्च । न हि त्वन्मतेऽविद्याभेदेन गुणानां प्रति प्रकरणव्यवस्था किन्तु मानुषाद्या हिरण्यगर्भान्ता मुक्त्यधिकारिणः फलतारतम्येन मुक्तिभाजः इत्यधिकारिभेद एवेति चेन्न । प्रमाणबलेन बाधकसत्त्वेन च तत्र तथात्वेऽपि प्रकृते तदभावेन शब्दान्तरादिभिर्भेदसिद्ध्युपपत्तेः । एतेन शब्दान्तरादिभिर्भेदसाधनमनुपपन्नम् । तथा हि । य एष जीवं प्रबोधयति एतस्माज्जीव उत्तिष्ठतीति विरुद्धधातुनिष्पन्नाख्यातरूपशब्दान्तरस्य भेदकत्वमुद्बोधकत्वावच्छिन्नस्योद्बोध्यत्वावच्छेदो विरुद्ध इति विरोधमूलमेव वाच्यम् । न च तद्युक्तम् । ब्रह्मणि त्वया विरुद्धधर्मसमावेशस्य बहुधाऽङ्गीकृतत्वात् । नित्यः परो नित्यो जीव इति नित्यत्वाभ्यासस्य परजीवयोरेकत्वे परनित्यत्वश्रुत्यैव जीवनित्यत्वसिद्धेः । तत्पुनः श्रुतिरनर्थिका स्यादिति पुनः श्रुत्यानर्थक्यमूलं वाच्यम् । तदपि न युक्तम् । कार्यकारणभेदवादिना शक्तिव्यक्त्यभेदवादिना च त्वया नित्यत्वानित्यत्वादिसाङ्कर्यस्याङ्गीकृततया तथैव परनित्यत्वेऽपि जीवानित्यत्वं स्यादिति शङ्कावारणेनापि तत्सार्थक्यात् । सङ्ख्याया गुणस्य च भेदकत्वं यस्मिन्पञ्चपञ्चजना अणोरणीयानित्यादौ त्वयैव प्रतिषिद्धम् । प्रकरणभेदो न भेदक इति तु स्पष्टमेव । भारतादिषु रामकृष्णादिचरितप्रतिपादकप्रकरणभेदेऽप्यभेदानपायात् । सृष्टिसंहारादिप्रतिपादकप्रकरणभेदेऽपि त्वया सृष्टिसंहारादिक्रियाणामभेदाभ्युपगमाच्च । एतेन जीवेशाविति नामधेयस्यापि भेदकत्वं प्रत्याख्यातम् । तस्मात्परस्परविरुद्धधर्मादिमतामवतारादीनामिव जीवानामप्यभेदश्रुत्यनुसारेण तदत्यन्ताभिन्नवासुदेवांशत्वं त्वया निवारयितुं न शक्यत इति निरस्तम् ।

त्त्वमसीत्याद्यभेदश्रुतीनां त्वदुक्तार्थमादाय लब्धस्थितिकत्वा-
भावेन वैषम्यात् । तस्माज्जीवब्रह्मभेदावलम्बनेन शास्त्रारम्भ-
समर्थनं युक्तमिति सर्वं समञ्जसम् ॥ छ ॥ मध्वतन्त्रमुखभूषणे
कृते सङ्ग्रहेण विजयीन्द्रयोगिना ॥ आदिमाधिकरणोपपादनं
मोदमावहतु सर्वधीमताम् ॥ १ ॥ स्वदर्शनोक्तदूषणं निराक-
रिष्णुरञ्जसा ॥ जयीन्द्रयोगिरूपतोऽवतीर्ण एष पूर्णधीः ॥२॥
समाप्तोऽयं ग्रन्थः ॥ श्रीकृष्णार्पणमस्तु ॥ छ ॥ छ ॥





सवणूरो गोन्विदः